'न स पुनरावर्तते' इति श्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति, न तु तदतीतेपीति ज्ञेयम् । समाप्तिज्ञापनायावृत्तिः ।

अथवा । श्रुतौ तदवस्थावधृतेर्हेतोरस्माकमपि तदवस्थावधृतिर्यतोऽतः फलानियमनिश्चयोपीत्यर्थः । एवं सति मुक्तिपर्यन्तं साधनं भगवद्भाव इति निर्णयः सम्पन्नः ॥ ५१ ॥

इति तृतीयाध्याये चतुर्थपादे नवमं मुक्तिफलानियम इत्यधिकरणम् ॥ ९ ॥

## इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

### समाप्तोयं तृतीयोऽध्यायः ।

---

भाष्यप्रकाशः ।

वृत्तिमापादयन्नुक्तां श्रुतिं विरुणद्धीति शङ्कायामाहुः एवं सतीत्यादि । श्रुतिद्वयस्याविरोधे कर्तव्ये सत्यनावृत्तिश्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति । उपकोसलब्राह्मणे 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इति विशेषनिर्देशात् । न तु तदतीतेपि । एतेनैवावृत्तिनिषेधस्य सामान्यत्वनिवारणादिति ज्ञेयमित्यर्थः ।

सूत्रस्थपदावृत्तेः समाप्तिमात्रबोधकत्वेऽर्थवत्ता न स्यादित्यतः पक्षान्तरमाहुः अथवेत्यादि । अत इति । श्रुत्यन्तराविरोधात् । सिद्धमाहुः एवमित्यादि । भगवद्भाव इति सप्तमी । तथा च परप्राप्तौ भगवद्भाव एव परमा साधनकाष्ठेत्यत्र सिद्धमित्यर्थः ।

रश्मिः ।

कतमां सम्यक् प्राप्य स्वेन रूपेण तत्तन्मुक्त्युचितेन । अभीति । ञिभी भय इत्यादीनां प्रत्ययान्तानां तदुचितं रूपम् । उत्तमः पुरुषोत्र पुरुषोत्तमलीलाप्रवेशात् तत्तल्लीलारसानुभविता । अत्यनुग्रहवांश्चेत्, उत्तमश्चासौ पुरुषः पुरुषोत्तम इति पुरुषोत्तमपदं कर्मधारयसमासेन निष्पन्नम् । सम्परिष्वक्तो भेदघटित इति भक्तिमार्गीयः । इवार्थो भेद इत्युक्तम् । एकीभावो 'न स पुनरावर्तत' इत्यत्र, इयं दशा मुक्तावस्था नित्यत्वरूपा अनावृत्तिरूपत्वात् । लीलारसानुभवितृत्वरूपा च विरुद्धानेकीभावरूपत्वात् । एकीभावेति । पूर्वाधिकरणविषयवाक्योक्ता पुनरावृत्तचैतन्यैकीभावदशाविरुद्धा । तदविरोधार्थमिति । विरोधाभावायेति भाष्यविवरणम् । श्रुत्योरिति । 'तस्य तावदेव चिर'मित्यस्याः 'न स पुनरावर्तत' इत्यस्याश्च । विशेषेति विशेषभावः 'यदेकमव्यक्तमनन्तरूप'मिति श्रुत्युक्त'तमसःपरस्ता'दित्युक्त्या पुरुषोत्तमः श्रुतिद्वयस्येति मानवमावर्तं नावर्तन्त इति श्रुत्युक्तनित्यलीलाया अपुनरावृत्तनित्यत्वरूपः औत्सर्गिकभावो अपुनरावृत्तनित्यत्वरूपः । पुनरावृत्तिर्मायिकानाम् । अमायिकानां पुरुषे विराजि दोधूयमानानां विशेषपदार्थवद् अपुनरावृत्तिः । पुष्टाविति वल्यनुग्रहसाध्यायाम् । तदभाव इति । वरणेन पुष्टिप्रवेशस्याभावे इत्यर्थः । मुक्त्यवस्थेति । पुष्टलामपि इत्यन्तभाष्यविवरणम् । अनियम इत्युक्तमिति । उभयोराश्रमयोः । इतरयोस्तदङ्गत्वात् । अत एवैकादशे सप्तदशाध्याये ब्रह्मचर्यगृहस्थाश्रमयोर्निरूपणम् । भिन्नेऽष्टादशाध्याये तुरीयवानप्रस्थाश्रमयोर्निरूपणम् । तस्य तावदेव चिरमित्यस्या न स पुनरित्यस्याश्च । अनावृत्तिश्रुतिरिति । 'इमं मानवमावर्त'मिति श्रुत्येकवाक्यताप्राप्ता । एतेनेति साधनेन । तदतीत इति मानवावर्तातीते जगद्व्यापारवर्जे, आत्मबोधोपनिषत्प्रसिद्धे, 'सत्यं ज्ञानमनन्तं यत् ब्रह्मज्योतिः सनातन'मित्युपष्टब्धे । एतेनेति उक्तनिर्देशस्य सामान्यान्तर्गतत्वेन । आवृत्तिनिषेधो विषयवाक्येन तस्य, सामान्य-

भाष्यप्रकाशः ।

अन्ये तु 'ऐहिक'सूत्रे साधकस्यैतज्जन्मनि विद्योत्पत्तिरुत, जन्मान्तरे इति सन्देहे, मम जन्मान्तरे विद्या भवत्वित्यभिसन्ध्यभावादिभिरस्मिन्नेव जन्मनीति प्राप्ते, प्रतिबन्धकाभावस्य कारणतायाः सर्वत्र सिद्धत्वादत्र वा परत्र वा यदैव प्रतिबन्धककर्मादिनिवृत्तिः, तदैव तत्र विद्योत्पत्तिरिति सिद्धान्तयन्ति ।

'एवं मुक्तिफलानियम' इति सूत्रे तु यथा साधनवीर्यविशेषाद्विद्याया ऐहिकामुष्मिकत्वकृतो विशेषः, तथा विद्याफलभूताया मुक्तेरप्युत्कर्षापकर्षरूपो विशेषो भवेदित्येवं प्राप्ते । उच्यते । एवं मुक्तिरूपे विशेषनियमो नास्ति । कुतः । तदवस्थावधृतेः । सर्वेषु ब्रह्मरूपत्वावधारणात्, 'अस्थूलमनणु,' 'स एष नेति नेत्यात्मा', 'यत्र नान्यत् पश्यति' इत्यादिश्रुतिभ्यो ब्रह्मण एकलिङ्गत्वस्यैव सिद्धत्वादित्याहुः ।

तदस्मन्मते पूर्वकक्षारूपमिति लिङ्गभूयस्त्वाधिकरणे निर्णीतम् । तदवगमिका विद्या च तत्रैव विश्रान्तेति निर्णीतं 'अक्षरधिया'मित्यधिकरणे । अतो नास्माभिस्तत्राधिकं किञ्चिद्विचार्यत इति बोध्यम् ॥ ५१ ॥

इति नवमं मुक्तिफलानियम इत्यधिकरणम् ॥ ९ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

समाप्तस्तृतीयोऽध्यायः ।

: रश्मिः ।

त्वस्य निर्धारणादिति पाठः । सामान्यत्वेति समानपदात् स्वार्थे ष्यञ् । सूत्रस्थपदेति । तदवस्थावधृतिपदस्यावृत्तिः समाप्तीति । व्यञ्जनया बोधकत्वे शक्त्यभावात् । अतः तदवस्थावधृतिपदसार्थवत्ता नेत्यर्थः । अथवेत्यादीति । श्रुतौ ज्ञानिनां तदवस्थावधृतेरस्माकं भक्तानामपि तदवस्थावधृतेः । यद्वा श्रुतौ प्रमाणभूतायाम् । अस्माकं प्रामाणिकानाम् । श्रुत्यन्तरेति । 'इमं मानव आवर्तं नावर्तन्त' इति श्रुत्यन्तराविरोधात् । भाष्ये फलानियम इति । तुरीयाश्रम एवेति नियमो न । यद्वा गृहस्थस्यानुग्रहभाजः स सर्वस्य न लीलानुभवः, कस्यचिदेवात्यन्तानुग्रहेण पुष्टिप्रविष्टस्य । अभिसन्धिः सङ्कल्पः । आदिनेच्छायत्नौ । भवेदिति । तथा च मुक्तेरेकरसत्वभङ्ग इति भावः । एकलिङ्गत्वस्येति । विधिनिषेधयोर्निषेधलिङ्गत्वस्य निषेधो लिङ्गं हेतुः प्रमाणं यस्य तत्त्वस्य । आरोपापवादात् । पूर्वकक्षेति । 'अरूपवदेव हि तत्प्रधानत्वा' दित्यत्र स्फुटम् । विद्येति परा विद्या । 'अथ परा यया तदक्षरमधिगम्यत' इति मुण्डकात् ॥ ५१ ॥

इति नवमं मुक्तिफलानियम इत्यधिकरणम् ॥ ९ ॥

इति श्रीविट्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण सम्पूर्णवेत्रा विट्ठलरायजिद्भ्रात्रीयगोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य तृतीयाध्यायस्य रश्मौ तृतीयाध्यायस्य चतुर्थपादः सम्पूर्णतामगमत् ॥ ४ ॥

समाप्तस्तृतीयाध्यायः ॥ ३ ॥

१. एतावतो ग्रन्थस्य श्लोकाना सङ्ख्या ८८१७ अष्टसहस्राष्टशतसप्तदश । अध्यायत्रयस्य श्लोकसङ्ख्या ३४२४२ चतुस्त्रिंशत्सहस्रद्विशतद्विचत्वारिंशत् । श्रीहस्ताक्षरमूलग्रन्थे इद श्रीगोपेश्वरैः स्वयमेव लिखितम् ।

❀